# महाभारत - महाप्रस्थानिक पर्व

# ॥ महाभारत महाप्रस्थानिकपर्वं ॥

## महाप्रस्थानिकपर्व

## पाण्डवप्रव्रजनम्

## अध्याय ००१

जनमेजय उवाच ॥

एवं वृष्ण्यन्धककुले श्रुत्वा मौसलमाहवम् ।
पाण्डवाः किमकुर्वन्त तथा कृष्णे दिवं गते ॥ ००१ ॥

वैशंपायन उवाच ॥

श्रुत्वैव कौरवो राजा वृष्णीनां कदनं महत् ।
प्रस्थाने मतिमाधाय वाक्यमर्जुनमब्रवीत् ॥ ००२ ॥

कालः पचति भूतानि सर्वाण्येव महामते ।
कर्मन्यासमहं मन्ये त्वमपि द्रष्टुमर्हसि ॥ ००३ ॥

इत्युक्तः स तु कौन्तेयः कालः काल इति ब्रुवन् ।
अन्वपद्यत तद्वाक्यं भ्रातुर्ज्येष्ठस्य वीर्यवान् ॥ ००४ ॥

अर्जुनस्य मतं ज्ञात्वा भीमसेनो यमौ तथा ।
अन्वपद्यन्त तद्वाक्यं यदुक्तं सव्यसाचिना ॥ ००५ ॥

ततो युयुत्सुमानाय्य प्रव्रजन्धर्मकाम्यया ।
राज्यं परिददौ सर्वं वैश्यापुत्रे युधिष्ठिरः ॥ ००६ ॥

अभिषिच्य स्वराज्ये तु तं राजानं परिक्षितम् ।
दुःखार्तश्चाब्रवीद्राजा सुभद्रां पाण्डवाग्रजः ॥ ००७ ॥

एष पुत्रस्य ते पुत्रः कुरुराजो भविष्यति ।
यदूनां परिशेषश्च वज्रो राजा कृतश्च ह ॥ ००८ ॥

परिक्षिद्धास्तिनपुरे शक्रप्रस्थे तु यादवः ।
वज्रो राजा त्वया रक्ष्यो मा चाधर्मे मनः कृथाः ॥ ००९ ॥

इत्युक्त्वा धर्मराजः स वासुदेवस्य धीमतः ।
मातुलस्य च वृद्धस्य रामादीनां तथैव च ॥ ०१० ॥

मातृभिः सह धर्मात्मा कृत्वोदकमतन्द्रितः ।
श्राद्धान्युद्दिश्य सर्वेषां चकार विधिवत्तदा ॥ ०११ ॥

ददौ रत्नानि वासांसि ग्रामानश्वान्रथानपि ।
स्त्रियश्च द्विजमुख्येभ्यो गवां शतसहस्रशः ॥ ०१२ ॥

कृपमभ्यर्च्य च गुरुमर्थमानपुरस्कृतम् ।
शिष्यं परिक्षितं तस्मै ददौ भरतसत्तमः ॥ ०१३ ॥

ततस्तु प्रकृतीः सर्वाः समानाय्य युधिष्ठिरः ।
सर्वमाचष्ट राजर्षिश्चिकीर्षितमथात्मनः ॥ ०१४ ॥

ते श्रुत्वैव वचस्तस्य पौरजानपदा जनाः ।
भृशमुद्विग्नमनसो नाभ्यनन्दन्त तद्वचः ॥ ०१५ ॥

नैवं कर्तव्यमिति ते तदोचुस्ते नराधिपम् ।
न च राजा तथाकार्षीत्कालपर्यायधर्मवित् ॥ ०१६ ॥

ततोऽनुमान्य धर्मात्मा पौरजानपदं जनम् ।
गमनाय मतिं चक्रे भ्रातरश्चास्य ते तदा ॥ ०१७ ॥

ततः स राजा कौरव्यो धर्मपुत्रो युधिष्ठिरः ।
उत्सृज्याभरणान्यङ्गाज्जगृहे वल्कलान्युत ॥ ०१८ ॥

भीमार्जुनौ यमौ चैव द्रौपदी च यशस्विनी ।
तथैव सर्वे जगृहुर्वल्कलानि जनाधिप ॥ ०१९ ॥

विधिवत्कारयित्वेष्टिं नैष्ठिकीं भरतर्षभ ।
समुत्सृज्याप्सु सर्वेऽग्नीन्प्रतस्थुर्नरपुङ्गवाः ॥ ०२० ॥

ततः प्ररुरुदुः सर्वाः स्त्रियो दृष्ट्वा नरर्षभान् ।
प्रस्थितान्द्रौपदीषष्ठान्पुरा द्यूतजितान्यथा ॥ ०२१ ॥

हर्षोऽभवच्च सर्वेषां भ्रातॄणां गमनं प्रति ।
युधिष्ठिरमतं ज्ञात्वा वृष्णिक्षयमवेक्ष्य च ॥ ०२२ ॥

भ्रातरः पञ्च कृष्णा च षष्ठी श्वा चैव सप्तमः ।
आत्मना सप्तमो राजा निर्ययौ गजसाह्वयात् ॥ ०२३ ॥

पौरैरनुगतो दूरं सर्वैरन्तःपुरैस्तथा ॥ ०२३ ॥

न चैनमशकत्कश्चिन्निवर्तस्वेति भाषितुम् ।
न्यवर्तन्त ततः सर्वे नरा नगरवासिनः ॥ ०२४ ॥

कृपप्रभृतयश्चैव युयुत्सुं पर्यवारयन् ।
विवेश गङ्गां कौरव्य उलूपी भुजगात्मजा ॥ ०२५ ॥

चित्राङ्गदा ययौ चापि मणिपूरपुरं प्रति ।
शिष्टाः परिक्षितं त्वन्या मातरः पर्यवारयन् ॥ ०२६ ॥

पाण्डवाश्च महात्मानो द्रौपदी च यशस्विनी ।
कृतोपवासाः कौरव्य प्रययुः प्राङ्मुखास्ततः ॥ ०२७ ॥

योगयुक्ता महात्मानस्त्यागधर्ममुपेयुषः ।
अभिजग्मुर्बहून्देशान्सरितः पर्वतांस्तथा ॥ ०२८ ॥

युधिष्ठिरो ययावग्रे भीमस्तु तदनन्तरम् ।
अर्जुनस्तस्य चान्वेव यमौ चैव यथाक्रमम् ॥ ०२९ ॥

पृष्ठतस्तु वरारोहा श्यामा पद्मदलेक्षणा ।
द्रौपदी योषितां श्रेष्ठा ययौ भरतसत्तम ॥ ०३० ॥

श्वा चैवानुययावेकः पाण्डवान्प्रस्थितान्वने ।
क्रमेण ते ययुर्वीरा लौहित्यं सलिलार्णवम् ॥ ०३१ ॥

गाण्डीवं च धनुर्दिव्यं न मुमोच धनञ्जयः ।
रत्नलोभान्महाराज तौ चाक्षय्यौ महेषुधी ॥ ०३२ ॥

अग्निं ते ददृशुस्तत्र स्थितं शैलमिवाग्रतः ।
मार्गमावृत्य तिष्ठन्तं साक्षात्पुरुषविग्रहम् ॥ ०३३ ॥

ततो देवः स सप्तार्चिः पाण्डवानिदमब्रवीत् ।
भो भो पाण्डुसुता वीराः पावकं मां विबोधत ॥ ०३४ ॥

युधिष्ठिर महाबाहो भीमसेन परंतप ।
अर्जुनाश्विसुतौ वीरौ निबोधत वचो मम ॥ ०३५ ॥

अहमग्निः कुरुश्रेष्ठा मया दग्धं च खाण्डवम् ।
अर्जुनस्य प्रभावेण तथा नारायणस्य च ॥ ०३६ ॥

अयं वः फल्गुनो भ्राता गाण्डीवं परमायुधम् ।
परित्यज्य वनं यातु नानेनार्थोऽस्ति कश्चन ॥ ०३७ ॥

चक्ररत्नं तु यत्कृष्णे स्थितमासीन्महात्मनि ।
गतं तच्च पुनर्हस्ते कालेनैष्यति तस्य ह ॥ ०३८ ॥

वरुणादाहृतं पूर्वं मयैतत्पार्थकारणात् ।
गाण्डीवं कार्मुकश्रेष्ठं वरुणायैव दीयताम् ॥ ०३९ ॥

ततस्ते भ्रातरः सर्वे धनञ्जयमचोदयन् ।
स जले प्राक्षिपत्तत्तु तथाक्षय्यौ महेषुधी ॥ ०४० ॥

ततोऽग्निर्भरतश्रेष्ठ तत्रैवान्तरधीयत ।
ययुश्च पाण्डवा वीरास्ततस्ते दक्षिणामुखाः ॥ ०४१ ॥

ततस्ते तूत्तरेणैव तीरेण लवणाम्भसः ।
जग्मुर्भरतशार्दूल दिशं दक्षिणपश्चिमम् ॥ ०४२ ॥

ततः पुनः समावृत्ताः पश्चिमां दिशमेव ते ।
ददृशुर्द्वारकां चापि सागरेण परिप्लुताम् ॥ ०४३ ॥

उदीचीं पुनरावृत्त्य ययुर्भरतसत्तमाः ।
प्रादक्षिण्यं चिकीर्षन्तः पृथिव्या योगधर्मिणः ॥ ०४४ ॥

# भीमादिपतनम्

## अध्याय ००२

वैशंपायन उवाच ॥

ततस्ते नियतात्मान उदीचीं दिशमास्थिताः ।
ददृशुर्योगयुक्ताश्च हिमवन्तं महागिरिम् ॥ ००१ ॥

तं चाप्यतिक्रमन्तस्ते ददृशुर्वालुकार्णवम् ।
अवैक्षन्त महाशैलं मेरुं शिखरिणां वरम् ॥ ००२ ॥

तेषां तु गच्छतां शीघ्रं सर्वेषां योगधर्मिणाम् ।
याज्ञसेनी भ्रष्टयोगा निपपात महीतले ॥ ००३ ॥

तां तु प्रपतितां दृष्ट्वा भीमसेनो महाबलः ।
उवाच धर्मराजानं याज्ञसेनीमवेक्ष्य ह ॥ ००४ ॥

नाधर्मश्चरितः कश्चिद्राजपुत्र्या परंतप ।
कारणं किं नु तद्राजन्यत्कृष्णा पतिता भुवि ॥ ००५ ॥

युधिष्ठिर उवाच ॥

पक्षपातो महानस्या विशेषेण धनञ्जये ।
तस्यैतत्फलमद्यैषा भुङ्क्ते पुरुषसत्तम ॥ ००६ ॥

वैशंपायन उवाच ॥

एवमुक्त्वानवेक्ष्यैनां ययौ धर्मसुतो नृपः ।
समाधाय मनो धीमान्धर्मात्मा पुरुषर्षभः ॥ ००७ ॥

सहदेवस्ततो धीमान्निपपात महीतले ।
तं चापि पतितं दृष्ट्वा भीमो राजानमब्रवीत् ॥ ००८ ॥

योऽयमस्मासु सर्वेषु शुश्रूषुरनहङ्कृतः ।
सोऽयं माद्रवतीपुत्रः कस्मान्निपतितो भुवि ॥ ००९ ॥

युधिष्ठिर उवाच ॥

आत्मनः सदृशं प्राज्ञं नैषोऽमन्यत कञ्चन ।
तेन दोषेण पतितस्तस्मादेष नृपात्मजः ॥ ०१० ॥

वैशंपायन उवाच ॥

इत्युक्त्वा तु समुत्सृज्य सहदेवं ययौ तदा ।
भ्रातृभिः सह कौन्तेयः शुना चैव युधिष्ठिरः ॥ ०११ ॥

कृष्णां निपतितां दृष्ट्वा सहदेवं च पाण्डवम् ।
आर्तो बन्धुप्रियः शूरो नकुलो निपपात ह ॥ ०१२ ॥

तस्मिन्निपतिते वीरे नकुले चारुदर्शने ।
पुनरेव तदा भीमो राजानमिदमब्रवीत् ॥ ०१३ ॥

योऽयमक्षतधर्मात्मा भ्राता वचनकारकः ।
रूपेणाप्रतिमो लोके नकुलः पतितो भुवि ॥ ०१४ ॥

इत्युक्तो भीमसेनेन प्रत्युवाच युधिष्ठिरः ।
नकुलं प्रति धर्मात्मा सर्वबुद्धिमतां वरः ॥ ०१५ ॥

रूपेण मत्समो नास्ति कश्चिदित्यस्य दर्शनम् ।
अधिकश्चाहमेवैक इत्यस्य मनसि स्थितम्  ॥ ०१६  ॥

नकुलः पतितस्तस्मादागच्छ त्वं वृकोदर ।
यस्य यद्विहितं वीर सोऽवश्यं तदुपाश्नुते  ॥ ०१७  ॥

तांस्तु प्रपतितान्दृष्ट्वा पाण्डवः श्वेतवाहनः ।
पपात शोकसंतप्तस्ततोऽनु परवीरहा  ॥ ०१८  ॥

तस्मिंस्तु पुरुषव्याघ्रे पतिते शक्रतेजसि ।
म्रियमाणे दुराधर्षे भीमो राजानमब्रवीत्  ॥ ०१९  ॥

अनृतं न स्मराम्यस्य स्वैरेष्वपि महात्मनः ।
अथ कस्य विकारोऽयं येनायं पतितो भुवि  ॥ ०२०  ॥

युधिष्ठिर उवाच  ॥

एकाह्ना निर्दहेयं वै शत्रूनित्यर्जुनोऽब्रवीत् ।
न च तत्कृतवानेष शूरमानी ततोऽपतत्  ॥ ०२१  ॥

अवमेने धनुर्ग्राहानेष सर्वांश्च फल्गुनः ।
यथा चोक्तं तथा चैव कर्तव्यं भूतिमिच्छता  ॥ ०२२  ॥

वैशंपायन उवाच  ॥

इत्युक्त्वा प्रस्थितो राजा भीमोऽथ निपपात ह ।
पतितश्चाब्रवीद्भीमो धर्मराजं युधिष्ठिरम्  ॥ ०२३  ॥

भो भो राजन्नवेक्षस्व पतितोऽहं प्रियस्तव ।
किंनिमित्तं च पतनं ब्रूहि मे यदि वेत्थ ह  ॥ ०२४  ॥

युधिष्ठिर उवाच ॥

अतिभुक्तं च भवता प्राणेन च विकत्थसे ।
अनवेक्ष्य परं पार्थ तेनासि पतितः क्षितौ ॥ ०२५ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा तं महाबाहुर्जगामानवलोकयन् ।
श्वा त्वेकोऽनुययौ यस्ते बहुशः कीर्तितो मया ॥ ०२६ ॥

---

# इन्द्रयुधिष्ठिरसंवादः

## अध्याय ००३

वैशंपायन उवाच ॥

ततः संनादयञ्शक्रो दिवं भूमिं च सर्वशः ।
रथेनोपययौ पार्थमारोहेत्यब्रवीच्च तम् ॥ ००१ ॥

स भ्रातॄन्पतितान्दृष्ट्वा धर्मराजो युधिष्ठिरः ।
अब्रवीच्छोकसंतप्तः सहस्राक्षमिदं वचः ॥ ००२ ॥

भ्रातरः पतिता मेऽत्र आगच्छेयुर्मया सह ।
न विना भ्रातृभिः स्वर्गमिच्छे गन्तुं सुरेश्वर ॥ ००३ ॥

सुकुमारी सुखार्हा च राजपुत्री पुरंदर ।
सास्माभिः सह गच्छेत तद्भवाननुमन्यताम् ॥ ००४ ॥

इन्द्र उवाच ॥

भ्रातॄन्द्रक्ष्यसि पुत्रांस्त्वमग्रतस्त्रिदिवं गतान् ।
कृष्णया सहितान्सर्वान्मा शुचो भरतर्षभ ॥ ००५ ॥

निक्षिप्य मानुषं देहं गतास्ते भरतर्षभ ।
अनेन त्वं शरीरेण स्वर्गं गन्ता न संशयः ॥ ००६ ॥

युधिष्ठिर उवाच ॥

अयं श्वा भूतभव्येश भक्तो मां नित्यमेव ह ।
स गच्छेत मया सार्धमानृशंस्या हि मे मतिः ॥ ००७ ॥

इन्द्र उवाच ॥

अमर्त्यत्वं मत्समत्वं च राज ;ञ्श्रियं कृत्स्नां महतीं चैव कीर्तिम् ।
संप्राप्तोऽद्य स्वर्गसुखानि च त्वं ; त्यज श्वानं नात्र नृशंसमस्ति ॥ ००८ ॥

युधिष्ठिर उवाच ॥

अनार्यमार्येण सहस्रनेत्र ; शक्यं कर्तुं दुष्करमेतदार्य ।
मा मे श्रिया सङ्गमनं तयास्तु ; यस्याः कृते भक्तजनं त्यजेयम् ॥ ००९ ॥

इन्द्र उवाच ॥

स्वर्गे लोके श्ववतां नास्ति धिष्ण्य ;मिष्टापूर्तं क्रोधवशा हरन्ति ।
ततो विचार्य क्रियतां धर्मराज ; त्यज श्वानं नात्र नृशंसमस्ति ॥ ०१० ॥

युधिष्ठिर उवाच ॥

भक्तत्यागं प्राहुरत्यन्तपापं ; तुल्यं लोके ब्रह्मवध्याकृतेन ।
तस्मान्नाहं जातु कथञ्चनाद्य ; त्यक्ष्याम्येनं स्वसुखार्थी महेन्द्र ॥ ०११ ॥

इन्द्र उवाच ॥

शुना दृष्टं क्रोधवशा हरन्ति ; यद्दत्तमिष्टं विवृतमथो हुतं च ।
तस्माच्छुनस्त्यागमिमं कुरुष्व ; शुनस्त्यागात्प्राप्स्यसे देवलोकम् ॥ ०१२ ॥

त्यक्त्वा भ्रातृन्दयितां चापि कृष्णां ; प्राप्तो लोकः कर्मणा स्वेन वीर ।
श्वानं चैनं न त्यजसे कथं नु ; त्यागं कृत्स्नं चास्थितो मुह्यसेऽद्य ॥ ०१३ ॥

युधिष्ठिर उवाच ॥

न विद्यते संधिरथापि विग्रहो ; मृतैर्मर्त्यैरिति लोकेषु निष्ठा ।
न ते मया जीवयितुं हि शक्या ; तस्मात्त्यागस्तेषु कृतो न जीवताम् ॥ ०१४ ॥

प्रतिप्रदानं शरणागतस्य ; स्त्रिया वधो ब्राह्मणस्वापहारः ।
मित्रद्रोहस्तानि चत्वारि शक्र ; भक्तत्यागश्चैव समो मतो मे ॥ ०१५ ॥

वैशंपायन उवाच ॥

तद्धर्मराजस्य वचो निशम्य ; धर्मस्वरूपी भगवानुवाच ।
युधिष्ठिरं प्रीतियुक्तो नरेन्द्रं ; श्लक्ष्णैर्वाक्यैः संस्तवसंप्रयुक्तैः ॥ ०१६ ॥

अभिजातोऽसि राजेन्द्र पितुर्वृत्तेन मेधया ।
अनुक्रोशेन चानेन सर्वभूतेषु भारत ॥ ०१७ ॥

पुरा द्वैतवने चासि मया पुत्र परीक्षितः ।
पानीयार्थे पराक्रान्ता यत्र ते भ्रातरो हताः ॥ ०१८ ॥

भीमार्जुनौ परित्यज्य यत्र त्वं भ्रातरावुभौ ।

मात्रोः साम्यमभीप्सन्वै नकुलं जीवमिच्छसि ॥ ०१९ ॥

अयं श्वा भक्त इत्येव त्यक्तो देवरथस्त्वया ।
तस्मात्स्वर्गे न ते तुल्यः कश्चिदस्ति नराधिप ॥ ०२० ॥

अतस्तवाक्षया लोकाः स्वशरीरेण भारत ।
प्राप्तोऽसि भरतश्रेष्ठ दिव्यां गतिमनुत्तमाम् ॥ ०२१ ॥

ततो धर्मश्च शक्रश्च मरुतश्चाश्विनावपि ।
देवा देवर्षयश्चैव रथमारोप्य पाण्डवम् ॥ ०२२ ॥

प्रययुः स्वैर्विमानैस्ते सिद्धाः कामविहारिणः ।
सर्वे विरजसः पुण्याः पुण्यवाग्बुद्धिकर्मिणः ॥ ०२३ ॥

स तं रथं समास्थाय राजा कुरुकुलोद्वहः ।
ऊर्ध्वमाचक्रमे शीघ्रं तेजसावृत्य रोदसी ॥ ०२४ ॥

ततो देवनिकायस्थो नारदः सर्वलोकवित् ।
उवाचोच्चैस्तदा वाक्यं बृहद्वादी बृहत्तपाः ॥ ०२५ ॥

येऽपि राजर्षयः सर्वे ते चापि समुपस्थिताः ।
कीर्तिं प्रच्छाद्य तेषां वै कुरुराजोऽधितिष्ठति ॥ ०२६ ॥

लोकानावृत्य यशसा तेजसा वृत्तसंपदा ।
स्वशरीरेण संप्राप्तं नान्यं शुश्रुम पाण्डवात् ॥ ०२७ ॥

नारदस्य वचः श्रुत्वा राजा वचनमब्रवीत् ।
देवानामन्त्र्य धर्मात्मा स्वपक्षांश्चैव पार्थिवान् ॥ ०२८ ॥

शुभं वा यदि वा पापं भ्रातृणां स्थानमद्य मे ।
तदेव प्राप्तुमिच्छामि लोकानन्यान्न कामये ॥ ०२९ ॥

राज्ञस्तु वचनं श्रुत्वा देवराजः पुरंदरः ।
आनृशंस्यसमायुक्तं प्रत्युवाच युधिष्ठिरम् ॥ ०३० ॥

स्थानेऽस्मिन्वस राजेन्द्र कर्मभिर्निर्जिते शुभैः ।
किं त्वं मानुष्यकं स्नेहमद्यापि परिकर्षसि ॥ ०३१ ॥

सिद्धिं प्राप्तोऽसि परमां यथा नान्यः पुमान्कचित् ।
नैव ते भ्रातरः स्थानं संप्राप्ताः कुरुनन्दन ॥ ०३२ ॥

अद्यापि मानुषो भावः स्पृशते त्वां नराधिप ।
स्वर्गोऽयं पश्य देवर्षीन्सिद्धांश्च त्रिदिवालयान् ॥ ०३३ ॥

युधिष्ठिरस्तु देवेन्द्रमेवंवादिनमीश्वरम् ।
पुनरेवाब्रवीद्धीमानिदं वचनमर्थवत् ॥ ०३४ ॥

तैर्विना नोत्सहे वस्तुमिह दैत्यनिबर्हण ।
गन्तुमिच्छामि तत्राहं यत्र मे भ्रातरो गताः ॥ ०३५ ॥

यत्र सा बृहती श्यामा बुद्धिसत्त्वगुणान्विता ।
द्रौपदी योषितां श्रेष्ठा यत्र चैव प्रिया मम ॥ ०३६ ॥

---